# चम्पूरामायणे

# बालकाण्डम्

०४ – १३.११.२०१७

vyoma
॥ वाचं धेनुमुपासीत ॥
Saṃskṛtam · Value Education · Technology



# पुनरावर्तनम्

- मङ्गलश्लोकः
- वाचं निशम्य – वाल्मीकिः माध्याह्निकार्थं तमसानदीं गच्छति
- तत्र कञ्चन – व्याधेन क्रौञ्चस्य वधं दृष्ट्वा करुणापूर्णस्य तस्य मुखात् छन्दोमयी वाणी निस्सरति
- मा निषाद – व्याधं प्रति वाल्मीकेः शापः अनुष्टुप्-छन्दसि निबद्धः

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam - Value Education - Technology

# तदनु समयोचितकृत्यं निर्वर्त्य स्वाश्रमं प्रति गतवति भगवति वाल्मीकौ

- तदनु, समय-उचित-कृत्यम्, निर्वर्त्य, स्व-आश्रमम्, प्रति, गतवति, भगवति, वाल्मीकौ ।
- तदनु = ततः, 'मा निषाद..' इति छन्दोमय्याः वाचः निस्सरणानन्तरम्
- समयोचितकृत्यम् = मध्याह्नकालोचितं कार्यम्, माध्याह्निकम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

# तदनु समयोचितकृत्यं निर्वर्त्य स्वाश्रमं प्रति गतवति भगवति वाल्मीकौ

- निर्वर्त्य = कृत्वा
- स्वाश्रमं प्रति = नैज-पर्णशालाम् उद्दिश्य
- गतवति = याते सति
- भगवति वाल्मीकौ = पूज्ये वाल्मीकिमहर्षौ

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

# तदनु समयोचितकृत्यं निर्वर्त्य स्वाश्रमं प्रति गतवति भगवति वाल्मीकौ

- समयोचितकृत्यम् – समयस्य उचितम्, समयोचितं कृत्यम्
- निर्वर्त्य – निर्+'वृतु वर्तने' (१.आत्मने) + णिजन्तात् ल्यप् (कृत्)
- स्वाश्रमम् – स्वस्य आश्रमः, तम्
- गतवति – गम्लृ गतौ + क्तवतु (कृत्), तकारान्तः, पुं, ७.१
- सतिसप्तमीप्रयोगः

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

वाणीविलासमपरत्र कृतोपलम्भम्
अम्भोजभूरसहमान इवाविरासीत् ।
आभाति यत्कृतिरनेकविधप्रपञ्च-
व्याजेन्द्रजालविधिसाधकपिञ्छिकेव ॥७॥

- रामायणरचनां चोदयितुं वाल्मीकेः पुरतः ब्रह्मा आविर्भवति ।
- वाणी-विलासम्, अपरत्र, कृत-उपलम्भम्, अम्भोज-भूः, अ-सहमानः, इव, आविर्-आसीत्, आभाति, यत्-कृतिः, अनेक-विध-प्रपञ्च-व्याज-इन्द्रजाल-विधि-साधक-पिञ्छिका, इव ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

वाणीविलासमपरत्र कृतोपलम्भम् अम्भोजभूरसहमान इवाविरासीत् ।
आभाति यत्कृतिरनेकविधप्रपञ्च-व्याजेन्द्रजालविधिसाधकपिञ्छिकेव ॥७॥

- आविरासीत् = प्रादुर्भूतः
- कः आविरासीत्? अम्भोजभूः = कमलभवः, चतुर्मुखब्रह्मा
- किमिव? असहमानः इव = अमृष्यमाणः इव
- किम् असहमानः? वाणीविलासम् = सरस्वत्याः लीलाम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

वाणीविलासमपरत्र कृतोपलम्भम् अम्भोजभूरसहमान इवाविरासीत् ।
आभाति यत्कृतिरनेकविधप्रपञ्च-व्याजेन्द्रजालविधिसाधकपिञ्छिकेव ॥७॥

- अपरत्र = अन्यस्मिन्, वाल्मीकौ
- कृतोपलम्भम् – कृतः = विहितः, उपलम्भः = प्राप्तिः येन तादृशम्
- स्वस्य पत्न्याः सरस्वत्याः विलासस्य अन्यस्मिन् उपलब्धिं सोढुम् अशक्तः इव, असूयया इव

vyoma ॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

वाणीविलासमपरत्र कृतोपलम्भम् अम्भोजभूरसहमान इवाविरासीत् ।
आभाति यत्कृतिरनेकविधप्रपञ्च-व्याजेन्द्रजालविधिसाधकपिञ्छिकेव ॥७॥

- कीदृशः अम्भूजभूः? यत्कृतिः = यस्य ब्रह्मणः कृतिः = क्रियाशक्तिः
- अनेकविध...पिञ्छिका इव आभाति = प्रकाशते
- पिञ्छिका = पिच्छम्, ऐन्द्रजालिकैः उपयुज्यमानः कूर्चः
- इन्द्रजालविधेः साधकपिञ्छिका

vyoma ॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

वाणीविलासमपरत्र कृतोपलम्भम् अम्भोजभूरसहमान इवाविरासीत् ।
आभाति यत्कृतिरनेकविधप्रपञ्च-व्याजेन्द्रजालविधिसाधकपिञ्छिकेव ॥७॥

- कः ब्रह्मणः इन्द्रजालविधिः?
- अनेकविधः = बहुप्रकारकः प्रपञ्चः = सर्गः एव अस्य व्याजः = अपदेशः, अयथार्थप्रदर्शनम्
- ब्रह्मा बहुप्रकारकस्य मिथ्यारूपस्य जगतः सृष्टिरूपम् इन्द्रजालं करोति । तस्य क्रियाशक्तिः एव अस्य इन्द्रजालस्य साधकपिञ्छिका

वाणीविलासमपरत्र कृतोपलम्भम् अम्भोजभूरसहमान इवाविरासीत् ।
आभाति यत्कृतिरनेकविधप्रपञ्च-व्याजेन्द्रजालविधिसाधकपिञ्छिकेव ॥७॥

- अन्वयः – अपरत्र कृतोपलम्भं वाणीविलासम् असहमानः इव अम्भोजभूः आविरासीत्, यत्कृतिः अनेकविधप्रपञ्चव्याजेन्द्रजालविधिसाधकपिञ्छिका इव आभाति ।
- तात्पर्य्यम् – सृष्टिकर्ता ब्रह्मा स्वस्य क्रियाशक्त्या बहुप्रकारकस्य प्रपञ्चस्य सृष्टिरूपम् इन्द्रजालं प्रदर्शयति । तादृशः सः पत्न्याः सरस्वत्याः विलासम् अन्यस्मिन् (वाल्मीकौ) उपलब्धम् असूयया सोढुम् अशक्तः इव (वाल्मीकेः पुरतः) प्रादुर्भूतः ।

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

वाणीविलासमपरत्र कृतोपलम्भम् अम्भोजभूरसहमान इवाविरासीत् ।
आभाति यत्कृतिरनेकविधप्रपञ्च-व्याजेन्द्रजालविधिसाधकपिञ्छिकेव ॥७॥

- आविरासीत् – 'अस भुवि' (२,परस्मै), लङ्, प्रथम.१ । आविस् – अव्ययम्, कृ-भू इत्येताभ्यां योगे प्रयुज्यते – आविर्भवति, आविष्करोति । 'प्राकाश्ये प्रादुराविः स्यात्' (अमरः) ।
- आभाति – आ+'भा दीप्तौ' (२.परस्मै), लट्, प्रथम.१

वाणीविलासमपरत्र कृतोपलम्भम् अम्भोजभूरसहमान इवाविरासीत् ।
आभाति यत्कृतिरनेकविधप्रपञ्च-व्याजेन्द्रजालविधिसाधकपिञ्छिकेव ॥७॥

- वाणीविलासम् – वाण्याः विलासः, तम्
- अपरत्र – अपर+त्रल् (सप्तम्यर्थे तद्धितः - किंसर्वनामबहुभ्यः)। अव्ययम्।
- कृतोपलम्भम् – कृतः उपलम्भः येन सः, तम्
- अम्भोजभूः – अम्भसि जायते इत्यम्भोजम्, अम्भोजात् भवति ।

vyoma ॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

वाणीविलासमपरत्र कृतोपलम्भम् अम्भोजभूरसहमान इवाविरासीत् ।
आभाति यत्कृतिरनेकविधप्रपञ्च-व्याजेन्द्रजालविधिसाधकपिञ्छिकेव ॥७॥

- असहमानः – न सहमानः । ‘षह मर्षणे’ (१.आत्मने) + शानच् (कृत्)
- यत्कृतिः – यस्य कृतिः
- इन्द्रजालस्य विधिः इन्द्रजालविधिः, साधिका पिञ्छिका साधकपिञ्छिका, अनेके विधाः यस्य सः अनेकविधः, अनेकविधः प्रपञ्चः, अनेकविधप्रपञ्चः व्याजः यस्य सः, अनेकविधप्रपञ्चव्याजः इन्द्रजालविधिः, अनेक..विधेः साधकपिञ्छिका ।

vyoma ॥वाचं धेनुमुपासीत॥ Samskrtam · Value Education · Technology

वाणीविलासमपरत्र कृतोपलम्भम् अम्भोजभूरसहमान इवाविरासीत् ।
आभाति यत्कृतिरनेकविधप्रपञ्च-व्याजेन्द्रजालविधिसाधकपिञ्छिकेव ॥७॥

- असहमानः इव – उत्प्रेक्षालङ्कारः । ‘सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना’ ।
- पिञ्छिकेव – उपमालङ्कारः ।

ततः परमहर्षेण महर्षिणा विधिवदभ्यर्चितः परमेष्ठी मध्यलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपतिष्ठमानयानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात् ।

- रामायणं रचयितुं ब्रह्मणः आज्ञा ।
- ततः, परम-हर्षेण, महर्षिणा, विधिवत्, अभ्यर्चितः, परमेष्ठी, मध्य-लोके, अपि, स्व-वृत्तम्, प्रकाशयितुम्, किल, भवन्तम्, एव, उपतिष्ठमानया, अनया, भारत्या, राम-चरितम्, यथा-श्रुतम्, व्याक्रियताम्, इति, व्याहृत्य, अन्तर्-अधात् ।

ततः परमहर्षेण महर्षिणा विधिवदभ्यर्चितः परमेष्ठी मध्यलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपतिष्ठमानयानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात् ।

- ततः – ब्रह्मणः प्रादुर्भावानन्तरम्
- परमहर्षेण – अत्यन्तं सन्तुष्टेन
- महर्षिणा – वाल्मीकिना
- विधिवत् - यथाशास्त्रम्

ततः परमहर्षेण महर्षिणा विधिवदभ्यर्चितः परमेष्ठी मध्यलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपतिष्ठमानयानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात् ।

- अभ्यर्चितः – अर्घ्य-पाद्य-आसनादिभिः पूजितः
- परमेष्ठी – सृष्टिकर्ता ब्रह्मा
- मध्यलोके – भूलोके अपि (स्वर्गः – भूमिः – पातालम्)
- अपि – लोकान्तरेषु ज्ञातपूर्वम् इत्यर्थः

ततः परमहर्षेण महर्षिणा विधिवदभ्यर्चितः परमेष्ठी मध्यलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपतिष्ठमानयानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात् ।

- स्ववृत्तम् – आत्मनः चरित्रम्/महिमानम्, अथवा वृत्तम् – छन्दोरूपत्वम्
- प्रकाशयितुम् – उद्द्योतयितुम्
- किल – खलु
- भवन्तम् एव – अर्हं त्वामेव, नान्यम्

ततः परमहर्षेण महर्षिणा विधिवदभ्यर्चितः परमेष्ठी मध्यलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपतिष्ठमानयानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात् ।

- उपतिष्ठमानया – अनुवर्तमानया
- अनया – भवतः मुखात् निर्गतया
- भारत्या – वाण्या, एतादृशैरेव छन्दोबद्धैः वचनैः इत्यर्थः
- रामचरितम् – श्रीरामस्य चरित्रम्

ततः परमहर्षेण महर्षिणा विधिवदभ्यर्चितः परमेष्ठी मध्यलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपतिष्ठमानयानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात् ।

- यथाश्रुतम् – नारदमुखेन श्रुतं क्रममेव अनुसृत्य
- व्याक्रियताम् – व्याख्यायताम्
- इति व्याहृत्य – एवम् उक्त्वा
- अन्तरधात् – अदृश्यः अभूत्

ततः परममहर्षेण महर्षिणा विधिवदभ्यर्चितः परमेष्ठी मध्यलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपतिष्ठमानयानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात् ।

- मच्छन्दादेव ते ब्रह्मन् प्रवृत्तेयं सरस्वती ।
- रामस्य चरितं कृत्स्नं कुरु त्वम् ऋषिसत्तम ॥ (बाल २.३१)
- धर्मात्मनो भगवतो लोके रामस्य धीमतः ।
- वृत्तं कथय धीरस्य यथा ते नारदात् श्रुतम् ॥ (बाल २.३२)

ततः परमहर्षेण महर्षिणा विधिवदभ्यर्चितः परमेष्ठी मध्यलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपतिष्ठमानयानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात् ।

- तात्पर्यम् – सृष्टिकर्तुः ब्रह्मणः आगमनेन अत्यन्तं सन्तुष्टः वाल्मीकिः यथाविधि तम् अर्घ्यादिभिः अर्चयामास । “आत्मनः छन्दोबद्धं रूपं भूलोके प्रकाशयितुमेव इयं वाणी भवतः मुखात् निर्गता । तादृशैरेव छन्दोबद्धैः वचनैः नारदात् श्रुतं रामचरित्रं वर्णय” इति वाल्मीकिम् आदिश्य ब्रह्मा अदृश्यः अभूत् ।

ततः परमहर्षेण महर्षिणा विधिवदभ्यर्चितः परमेष्ठी मध्यलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपतिष्ठमानयानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात् ।

- परमहर्षेण – परमः हर्षः यस्य सः, तेन
- महर्षिणा – महान् ऋषिः, तेन
- विधिवत् – विधिम् अर्हति – विधि + वति (तद्धितः)
- अभ्यर्चितः – अभि+ “अर्च पूजायाम्” + क्त (कृत्)

ततः परमहर्षेण महर्षिणा विधिवदभ्यर्चितः परमेष्ठी मध्यलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपतिष्ठमानयानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात् ।

- परमेष्ठी – परमे तिष्ठति – अलुक्समासः । "ब्रह्मात्मभूः सुरज्येष्ठः परमेष्ठी पितामहः" (अमरः) । नकारान्तः, पुं, १.१
- प्रकाशयितुम् – प्र+ "काशृ दीप्तौ" + तुमुन् (कृत्) – अव्ययम्
- भवन्तम् – तकारान्तः सर्वनामशब्दः, पुं, २.१

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam ·Value ...

ततः परमहर्षेण महर्षिणा विधिवदभ्यर्चितः परमेष्ठी मध्यलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपतिष्ठमानयानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात् ।

- उपतिष्ठमानया – उप + “ष्ठा गतिनिवृत्तौ” + शानच् (कृत्) । आकारान्तः, स्त्री, ३.१
- भारत्या – ईकारान्तः, स्त्री, ३.१ । “ब्राह्मी तु भारती भाषा” (अमरः)
- यथाश्रुतम् – श्रुतम् अनतिक्रम्य । अव्ययीभावः ।

ततः परमहर्षेण महर्षिणा विधिवदभ्यर्चितः परमेष्ठी मध्यलोकेऽपि स्ववृत्तं प्रकाशयितुं किल भवन्तमेवोपतिष्ठमानयानया भारत्या रामचरितं यथाश्रुतं व्याक्रियतामिति व्याहृत्यान्तरधात् ।

- व्याक्रियताम् – वि + आ + “डुकृञ् करणे”, कर्मणि लोट्, प्रथम.१
- रामचरितं भवता व्याक्रियताम् (कर्मणि) -> रामचरितं भवान् व्याकरोतु (कर्तरि)
- व्याहृत्य – वि + आ + “हृञ् हरणे” + ल्यप् (कृत्) – अव्ययम्
- अन्तरधात् – अन्तर् + “डुधाञ् धारणपोषणयोः”, लुङ्, प्रथम.१

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

अथ सरसिजयोनेराज्ञया रामवृत्तम्
करबदरसमानं प्रेक्ष्य दृष्ट्या प्रतीच्या ।
शुभमतनुत काव्यं स्वादु रामायणाख्यम्
मधुमयफणितीनां मार्गदर्शी महर्षिः ॥८॥

- वाल्मीकिना रामायणस्य प्रणयनम्
- अथ, सरसिज-योनेः, आज्ञया, राम-वृत्तम्, कर-बदर-समानम्, प्रेक्ष्य, दृष्ट्या, प्रतीच्या, शुभम्, अतनुत, काव्यम्, स्वादु, रामायण-आख्यम्, मधुमय-फणितीनाम्, मार्गदर्शी, महर्षिः

अथ सरसिजयोनेराज्ञया रामवृत्तम् करबदरसमानं प्रेक्ष्य दृष्ट्या प्रतीच्या ।
शुभमतनुत काव्यं स्वादु रामायणाख्यम् मधुमयफणितीनां मार्गदर्शी महर्षिः ॥८॥

- अथ – ब्रह्मणः अन्तर्धानानन्तरम्
- अतनुत – व्यरचयत्
- किम् अतनुत? काव्यम् – कविप्रबन्धम्
- किंनामकं काव्यम्? रामायणाख्यम् – ‘रामायणम्’ इति विख्यातम्

vyoma
॥वाचं धेनुमुपासीत॥
Samskrtam · Value Education · Technology

अथ सरसिजयोनेराज्ञया रामवृत्तम् करबदरसमानं प्रेक्ष्य दृष्ट्या प्रतीच्या ।
शुभमतनुत काव्यं स्वादु रामायणाख्यम् मधुमयफणितीनां मार्गदर्शी महर्षिः ॥८॥

- कीदृशं काव्यम्? शुभम् – वक्तृणां श्रोतृणां च कल्याणकरम्
- स्वादु – पाठतः गानतश्च मधुरम्
- कः अतनुत? महर्षिः – वाल्मीकिः
- कीदृशः महर्षिः? मधुमयफणितीनाम् – अमृततुल्यानां रसयुक्तानां वचनानां
- मार्गदर्शी – पथिप्रदर्शकः, सकलकविकुलगुरुः

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskritam · Value Education · Technology

अथ सरसिजयोनेराज्ञया रामवृत्तम् करबदरसमानं प्रेक्ष्य दृष्ट्या प्रतीच्या ।
शुभमतनुत काव्यं स्वादु रामायणाख्यम् मधुमयफणितीनां मार्गदर्शी महर्षिः ॥८॥

- केन अतनुत? आज्ञया – शासनेन
- कस्य आज्ञया? सरसिजयोनेः – कमलसम्भवस्य ब्रह्मणः
- किंकृत्वा अतनुत? प्रेक्ष्य – दृष्ट्वा
- किं प्रेक्ष्य? रामवृत्तम् – श्रीरामस्य चरितम्

vyoma ॥वाचं धेनुमुपासीत॥ Samskritam · Value Education · Technology

अथ सरसिजयोनेराज्ञया रामवृत्तम् करबदरसमानं प्रेक्ष्य दृष्ट्या प्रतीच्या ।
शुभमतनुत काव्यं स्वादु रामायणाख्यम् मधुमयफणितीनां मार्गदर्शी महर्षिः ॥८॥

- केन प्रेक्ष्य? प्रतीच्या दृष्ट्या – योगचक्षुषा
- कीदृशं प्रेक्ष्य? करबदरसमानम् – हस्तस्थितेन बदरफलेन तुल्यम्, निःशेषम् इत्यर्थः

vyoma
॥वाचं धेनुमुपासीत॥
Samskritam · Value Education · Technology

अथ सरसिजयोनेराज्ञया रामवृत्तम् करबदरसमानं प्रेक्ष्य दृष्ट्या प्रतीच्या ।
शुभमतनुत काव्यं स्वादु रामायणाख्यम् मधुमयफणितीनां मार्गदर्शी महर्षिः ॥८॥

- रहस्यं च प्रकाशं च यद्वृत्तं तस्य धीमतः । रामस्य सह सौमित्रे राक्षसानां च सर्वशः ॥
- वैदेह्याश्चैव यद्वृत्तं प्रकाशं यदि वा रहः । तच्चाप्यविदितं सर्वं विदितं ते भविष्यति ॥

(बाल २.३३, २.३४)

- ततः पश्यति धर्मात्मा तत्सर्वं योगमास्थितः । पुरा यत् तत्र निर्वृत्तं पाणावामलकं यथा ॥

(बाल ३.६)

vyoma
॥ वाचं धेनुमुपासीत ॥
Samskrtam · Value Education · Technology

अथ सरसिजयोनेराज्ञया रामवृत्तम् करबदरसमानं प्रेक्ष्य दृष्ट्या प्रतीच्या ।
शुभमतनुत काव्यं स्वादु रामायणाख्यम् मधुमयफणितीनां मार्गदर्शी महर्षिः ॥८॥

- अन्वयः – अथ सरसिजयोनेः आज्ञया प्रतीच्या दृष्ट्या रामवृत्तं करबदरसमानं प्रेक्ष्य मधुमयफणितीनां मार्गदर्शी महर्षिः रामायणाख्यं शुभं स्वादु काव्यम् अतनुत ।
- तात्पर्यम् – ब्रह्मणः आज्ञानुगुणं योगदृष्टिं प्राप्य वाल्मीकिः रामचरितं सर्वमपि हस्तस्थितं बदरफलमिव द्रष्टुं शक्तवान् । ततः सः रामायणनामकं कल्याणप्रदं मधुरं काव्यं विरचय्य स्वस्य मधुरैः वचनैः सर्वेषां कवीनां मार्गदर्शनं कृतवान् ।

अथ सरसिजयोनेराज्ञया रामवृत्तम् करबदरसमानं प्रेक्ष्य दृष्ट्या प्रतीच्या ।
शुभमतनुत काव्यं स्वादु रामायणाख्यम् मधुमयफणितीनां मार्गदर्शी महर्षिः ॥८॥

- अतनुत – "तनु विस्तारे" (६, उभय) – आत्मनेपदे लङ्, प्रथम.१
- प्रेक्ष्य – प्र+ "ईक्ष दर्शने" (१, आत्मने) + ल्यप् (कृत्)
- सरसिजयोनेः – सरसि जायते इति सरसिजम् । उपपदसमासः – अलुक्। सरसिजं योनिः यस्य सः, तस्य । "धाता-अब्जयोनिः-द्रुहिणः" (अमरः)

अथ सरसिजयोनेराज्ञया रामवृत्तम् करबदरसमानं प्रेक्ष्य दृष्ट्या प्रतीच्या ।
शुभमतनुत काव्यं स्वादु रामायणाख्यम् मधुमयफणितीनां मार्गदर्शी महर्षिः ॥८॥

- करबदरसमानम् – करे बदरम् करबदरम्, करबदरेण समानम् ।
- प्रतीच्या – ईकारान्तः, स्त्री, ३.१ । “प्राच्यवाचीप्रतीच्यस्ताः पूर्वदक्षिण-पश्चिमाः” (अमरः) । प्रत्यञ्चति – अन्तर्मुखं याति इत्यर्थे अत्र प्रयोगः ।
- रामायणाख्यम् – रामस्य अयनम् । रामायणम् आख्या यस्य तत् ।

अथ सरसिजयोनेराज्ञया रामवृत्तम् करबदरसमानं प्रेक्ष्य दृष्ट्या प्रतीच्या ।
शुभमतनुत काव्यं स्वादु रामायणाख्यम् मधुमयफणितीनां मार्गदर्शी महर्षिः ॥८॥

- मधुमयफणितीनाम् – मधु+मयट् (ताद्रूप्ये तद्धितः)+ङीप्, मधुमय्यः फणितयः, तासाम् । 'भणितिः' इति पाठान्तरम् ।
- मार्गदर्शी – मार्गं दर्शयति – ताच्छील्ये णिनिः (कृत्), उपपदसमासः। नकारान्तः पुं, १.१ ।
- मालिनीवृत्तम् – 'ननमयययुतेयं मालिनी भोगिलोकैः' - १५ (८+७) वर्णाः






QUESTIONS/DOUBTS?

Email us @

sanskritfromhome@vyomalabs.in









- For downloading course-materials, login @ www.sanskritfromhome.in
- Subscribe to our youtube channel @ vyoma-samskrta-pathasala
- Buy our Samskrita-learning products @ www.digitalsanskritguru.com
- Support our cause for Samskrita-Samskriti @ www.vyomalabs.in